





श्रीरामनवमि पर्वदिन सन्दर्भे ०७-०४-२०२० दिनाङ्के ओण्टिमिट्ट,
श्रीकोदण्डरामालये प्रचलित श्री सीतारामयोः कल्याण महोत्सव दृश्याणि।
करोनावैरस् व्याप्तिकारणात् अर्चकाः एकांते एतत् कल्याणं समाचरिताः।





## गीतामृतम्

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्।।

यद्यपि अस्माकं सैन्यस्य रक्षकः भीष्मः तथापि सैन्यमिदम् असमर्थम्। पाण्डवानां सैन्यस्य रक्षकः यद्यपि भीमः तथापि तत्सैन्यम् अत्यन्तं समर्थम् इति मम प्रतिभाति।

(भगवद्गीता १०/९)

## जगन्नाथाष्टकम्



परं ब्रह्मापीडः कुवलयदलोत्फुल्लनयनो
निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि।
रसानन्दो राधासरसवपुरालिङ्गनसुखो
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।
(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)

जगन्नाथः परब्रह्मस्वरुपः इति तदेव तत्त्वं निरूपितम्। तस्य नेत्रे अतिविशाले भवतः। नीलाचले सः वसति, तथापि आदिशेषस्य फणासु चरणौ निक्षिपति इति विष्णुस्वरूपं प्रतिपादितम्। राधानामिकायाः गोपिकायाः आलिङ्गनसुखम् अनुभवन् आनन्दमनुभवन् तिष्ठति। अनेन कृष्णावतारघट्टः वर्णितः।

# 'सप्तगिरि' स्वर्णोत्सव शुभसमये...

मानव जीवने आध्यात्मिकं, लौकिकं इति अंश द्वयं नितान्त प्रसिद्धं भवति। इदमंशद्वयमपि यदा मानव जीवनं वृषभशकटेव परिभ्रामयति। तदैव अस्य जीविका सुखेन संतृप्त्या प्रशान्तेन प्रचलति। मानवानां कृते धनार्जनं अत्यन्तावश्यकं भवति। तेन साकं आध्यात्मिक जीवने अवगाहनमत्यन्तावश्यकं भवति। दैवप्रीतिः, पापभीतिः इत्यादि लक्षणानि मानवानांमत्यन्तावश्यकानि भवन्ति! अस्माकं हृदये प्रेमा, क्षमा, कारुण्य भावनाः स्थापनीयाः। सर्वैस्साकं प्रेम्णा व्यवहारः कर्तव्यः। यदा वयं लौकिक आध्यात्मिक विषयद्वयं समदृष्ट्या पश्यामः तदानीमेव नूतन जीविकायाः आविष्कारः भवति। एतत् सर्वं साधयितुं एका शक्तिः आवश्यकी भवति! साशक्तिरेव सप्तगिरीति कथने नकाथतिशयोक्तिः। नकोप्यलङ्कारप्रयोगः तदपेक्षया! ''समाजश्रेयः एव साहित्यस्य परमार्थः'' इति विदुषां मतमादृत्य प्रचाल्यमानासु पत्रिकासु 'सप्तगिरि' पत्रिका चूडामणिः इति निस्सङ्कोचं वक्तुं पारयामः! तिरुमलगिरि सार्वभौम विषय विशेषान् भक्तेभ्यः वितनोतीयंपत्रिका! लक्षाधिकभक्तहृदयेषु वेङ्कटेश्वर अनन्तशक्तिम् इयं पत्रिका अनुभावयति। 'अक्षराणां आकारोस्मीत्युक्तरीत्या' पत्रिकायां विद्यमान प्रत्येक पुटमपि वेङ्कटेश्वरस्य पादयोः अक्षरार्चनं करोति। तत् प्रसादम् अनवरतं पञ्चाशत् वर्षेभ्यः भक्तेभ्यः वितनोति!

'तिरुमलयात्रा' इत्युक्ते एकादिव्यानुभूतिः! भक्ताः परमानन्देन यात्रारम्भादवसानं यावत् गोविन्दनामजपं कुर्वन्तः परमानन्द तुन्दिल मनस्काः भवति। ''कलौस्मारणान्मुक्तिः'' इत्युक्त रीत्या स्मरणेन भक्तान् तारयति वेङ्कटपतिः। तथापि मानवाः प्रकृति संसर्गेण स्थिताः इति हेतुना मायासमुद्रतरणं एतेषां सुतरांक्लेशः इति निदानेन तत् कार्यमपि तस्य भुजस्कन्धे स्थापितवान्। भवसागरात् भक्ततरणाय स्वामी सर्वदा कटिबद्धः भवति। भक्तानां यात्र परिसमापनानन्तरं ''सप्तगिरि'' रूपेण तेषां गृहे स्थित्वा भगवन्नाम जपं कारयति! तादृश महापुरुषः श्रीनिवासः!

स्वामिनं वयं नातिदूरे स्थित्वा दर्शिताः इति अनुभूतिं पत्रिका चित्राणि कारयन्ति।पण्डितराचनाः आमूलाग्रं इमां पत्रिकां पठनाय प्रोत्साहयन्ति। संदर्भानुगुणम् अस्यां पत्रिकायां शीर्षिकाः, व्यासाः, आगच्छन्तीति अस्याः पत्रिकायाः विशेषः भवति! अस्याः पत्रिकायाः कर्मठाः न कार्य भावेन अपितु वेङ्कटेश्वर चरणकमल सेवाभावेन कार्यं कुर्वन्तः भगवदनुग्रहं प्राप्नुवन्ति। अस्यां पत्रिकायां भक्त अनुभवाः अधिकार सूचनाः, मार्गदर्शकाः, भक्तसमस्याः परिष्काराश्च भगवत्कैङ्कर्य विशेषाः, उत्सवविशेषाः, अभिवृद्धि कार्यक्रमविशेषाः, अत्रोपनिबद्धाः भवन्ति। तेन परमानन्देन भक्ताः पठितुं इयं पत्रिका विविधालङ्कारैः रराजन् प्रोत्साहयति।

इयं 'सप्तगिरि' पत्रिका असाधारण पत्रिका। वेङ्कटपति लीला तरङ्गिणी। भक्त भावझरी इव लोके राराज्यते।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


**गौरवसम्पादकः-**
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

**प्रकाशकः - प्रधानसम्पादकः**
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

**सम्पादकः -** डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

**मुद्रापकः -** श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

**छायाचित्रग्रहणम् -** श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसंपादकः*


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०२


# मे -२०२०

श्रीशार्वरि नाम संवत्सरस्य वैशाख शुक्ल अष्टमि तः ज्येष्ठ शुक्ल नवमि पर्यन्तम् - १९४१



**मुखचित्रम् –** विनरोभाग्यमु विष्णुकथ...
**अन्तिमरक्षापुटः –** श्रीवेङ्कटेश्वरस्वामिनः सन्निधौ तरिगोण्ड वेंगमांब

## सङ्केतः


प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

तेलुगु मूलम् - डा.के. राधारमणः
प्रधानसंपादकः, ति.ति.दे., तिरुपति।




संस्कृतानुवादः - डा.सि.आदिलक्ष्मीः,
चरवाणी - ९९४९८७२१४९

# सनातनहैन्दवप्रचारे सप्तगिरिपत्रिकायाः स्थानम्

जनानां सत्प्रवर्तनं, सदाचारं, धर्माचरणं प्रेरयितुं अग्रे गन्तुं धार्मिकपत्रिकाः प्रमुखस्थानं वहन्ति। तत्रापि तिरुमलतिरुपतिदेवस्थानम् प्रचुरितः 'सप्तगिरि' धार्मिकमास-पत्रिकायाः स्थानमितोऽपि विशिष्टतां प्राप्नोति। पत्रिकायाः पूर्वापरौ पश्यामः। शेषाचलपतेः श्रीनिवासस्य दर्शनार्थं आगताः सहस्राधिकयात्रिकाः देवस्थानं करिष्यमाणः सौकर्यादिविवराः क्षुण्णतया भक्ताः ज्ञातुं, एवमेव क्षेत्रवैशिष्ट्यं, पौराणिकविषयं, वैदिक विज्ञानं प्रबोधयित्वा आस्तिकानामाध्यात्मिककान्तिः निरन्तरं प्रसारयितुं सहायतां दातुं १९४९ वत्सरे तिरुमलतिरुपतिदेवस्थानम् एकं प्रचारसाधनं आविष्कारार्थं श्रीकारं कृतम्। तत्फलितेन एप्रेल् १९४९ वत्सरे करपत्रसदृशा पत्रिका आगता। तदानीं प्रचारमात्रमेवासीत्। तन्नाम देवस्थानस्य 'बुलेटिन्' अनन्ततयायेतदेव श्रीवेङ्कटेश्वरसेवाकार्यक्रमः दिनदिनप्रवर्धमानः गतः। देवस्थानसमाचारप्रसारेण स्साकं, अनेकानामार्षविज्ञानप्रसिद्धपण्डितानां सहकारेण उत्तमाध्यात्मिकसाहितीसौरभान् १९६१ वर्षपर्यन्तं प्रफुल्लितमस्ति। इदानींतनकाले श्रीवेङ्कटेश्वरप्राच्य परिशोधनालयमपि देवस्थानस्याधीने वर्तनीयत्वात्, सर्वेषां पण्डितानां प्रशंसाः व्यासरूपे पत्रिकायाः अपेक्षितां प्रणाळिक परपतिं च प्रदत्ताः। सत्यतया देवस्थानतः आगतेषु ग्रन्थेषु अधिकशातं प्रथमतया मासपत्रिकायां प्रचरणानन्तरमेव ग्रन्थरूपं सम्प्राप्तेतिकथनेनास्यतिशयोक्तिः। औषधिः वृक्षत्वपरिणामः पुष्पं फलवत् परिणामः साधरणमेव। एवमेव अस्यां पत्रिकां तिरुपतियात्रासहायिनीस्थाय्यामेव न संस्थाप्ययेनां महोज्वलमाध्यात्मिकतायाः प्रसारणप्रतीकतया उपस्थापयितुं मासपत्रिकारूपतया पनरिणामार्थं कृतं, प्रयत्नं १९६१ वत्सरे प्रारम्भं जातम्। 'बुलिटेन्' देवस्थानमासपत्रिका वार्तापत्रिकानिबन्धानामनुगुणं नामसार्थक्यं १९६१ वत्सरे कृतम्। तत्कार्यरूपमेव एकं सम्पादकं, अनुबन्धकर्मचारिणां १९६३ वत्सरे नियामकत्वं जातम्। तद्वारा पत्रिकायाः अस्याः प्रगत्यां प्रत्येकश्रद्धां स्वीकर्तुं अवकाशागता। तदानीं पत्रिकायाः प्रतयः संख्या ३००० एव। लघु आकृत्यां (१/८ डेम्मि) स्थितां इमां पत्रिकां, तादृशेषु दिनेषु प्रयतदक्षिणानां प्रदानेनस्साकं तिरुमला, चेन्नै, हैदराबाद्, बेंगुलूर्प्रान्तेषु पत्रिकायाः विक्रयणनिर्वहणमासीत्। आंग्लं, तमिळं, कन्नडं, हिन्दीभाषासु व्यासानि लघुतया प्रचुरिताः आसन्। आशिषः फलं प्राप्तुं पत्रिकायाः अस्तित्वं दशजनानां परिज्ञातुं अवसरमागतम्। अस्याः प्रणाळिकायाः प्रारम्भार्थं पत्रिकायाः विक्रयकार्यं तिरुमलतिरुपतिदेवस्थानस्य तदानीं स्थितः धर्मशालणां, देवालयाणां, समाचारकेन्द्रेषु १९६६ वत्सरे जुलैमासे प्रारम्भं जातम्। विक्रय केन्द्राणि तिस्रः द्वादशपर्यन्तमागत्य पुनः विस्तरणं जातम्। तद्वारा पत्रिकायाः संख्या वर्धिता। देवस्थानविधानप्रचारम्, आर्ष विज्ञानप्रसारं आशयत्वे गतेसति बहुषु प्रान्तेषु विस्तरणस्यावसरत्वं जातम्। अतः पत्रिकायाः संनियोगे अन्यव्यक्तिनां द्वारा विक्रयविधानं १९६७ एप्रिल्मासे आरम्भः जातः। बहुभाषासु संवर्धितां देवस्थानपत्रिकां १९७० संवत्सरे जनवरिमासतः आंग्लं, संस्कृतं, सर्वतया पत्रिकान्तर्भागतया पत्रिकां तेलुगु, तमिळं, कन्नडं, हिन्दी भाषापत्रिकाः इत्येवं पृथक्कृत्वा विस्तरितवन्तः। तद्वारा सा भाषापत्रिका, तस्याः भाषायाः प्रान्ते अन्ततोगन्तुमवकाशमागता। अर्थात् स्थिरप्रातिपदिकया पत्रिकां निर्माणविधानं १९६६ संवत्सरात् १९७० वत्सरपर्यन्तं विविधदशासु सञ्जातः। १९४९ वत्सरात् १९७० वत्सरपर्यन्तं प्रायः विंशतिवर्षाणि पत्रिका, पत्रिकायाः सम्प्रदायानुसारं




स्वावलम्बितया विना सांकेतिकतया अभिवृद्धिं गता। १९७० वत्सरे जून्मासे, सप्तगिरयः साङ्केतिकपत्रिकतया 'बुलेटिन्' रूपतया अविर्भूयवर्धनं प्राप्य 'सप्तगिरि' नाम्नावतरिता। तदानीमारभ्य एतावत्पर्यन्तं तादृशं चरितं वर्तते अस्याः पत्रिकायाः। अद्यारभ्य पत्रिकायाः गत्यौ गणनीयपरिवर्तनं आनीताः। एतानि वर्षाणि लघुपत्रिकायाः रूपे स्थितामिमां एप्रैल् १९७२ वत्सरे (१/४ क्रौन्) परिणामा जाता। आंग्लं, संस्कृतमपि सर्वासां पत्रिकाणां समानतया वृद्धित्वमागता। अनवसश्वाग्भाषणानि दूरीकृत्य, विभिन्नभाषापत्रिकाः तत्प्रान्तेषु गणनीयाभिवृद्धिं प्राप्तुं सौकर्यतया जनवरि १९७५ संवत्सरात् आंगलभाषां पृथत्कृत्य पञ्चसु भाषासु पत्रिकाः प्रचुरिताः आसन्। एतया पद्धत्या प्रत्येकपत्रिका अन्यया पत्रिकया सम्बन्धरहिता जाता। पूर्वेरेव प्रचुरणार्थं अवकाशोऽपि लब्धा। १९७५ संवत्सरे आगस्तमासे पत्रिकायाः १/४ क्रौनतः १/४ डेम्मि आकारमपि प्राप्ता। सप्तगिरिमासपत्रिका पाठकलोकाधरणेन दिनदिनप्रवर्धमाना जाता। अत्रैवभागतया २०१४ एप्रिलतः संस्कृतभाषायामपि पत्रिका प्रचुरणमारम्भ जाता। २०१६ जनवरितः सप्तगिरिपत्रिका षण्णां भाषाणां (तेलुगु, तमिळं, कन्नडं, हिन्दी, आंग्लं संस्कृतं) परिपूर्णवर्णैः सचित्रमासपत्रिकतया वर्धिष्यमाणा जाता। केवलं ३००० प्रतयः मुद्रणादारभ्य सप्तगिरिपत्रिका 'इंन्तिन्तै वटुडिंन्तै' इति कथनानुसारं अद्य २,००,००० प्रतयः परिचलनस्थितिं सम्प्राप्तम्। अत्यधिकपरिचलनपत्रिका 'सप्तगिरि' इत्येवं प्रशंसां प्राप्ता। प्रशंशायाः कृषिः, वृद्धिः तत्फलितः नैकस्मिन् व्यक्तेर्भवति। अपितु कार्यनिर्वहणाधिकारिणः एकैकः स्वकीये मार्गे सप्तगिरिपत्रिकायाः प्रगत्याः साहाय्यं दत्वा अग्रे नीतवन्तः। प्रारंभदिनादारभ्य 'सप्तगिरि' पत्रिका भक्त्याः, धार्मिकतायाः, आध्यात्मिकतायाः प्राधान्यता दत्ता। इतरपुण्यक्षेत्रविषयाणां, देवतानां - त्रिविधमताचार्याणां विशेषाणां, सिद्दान्तानां संस्थाप्य - एते समाजस्य कथमुपकुर्वत्येतन्विषयं, भक्तिमार्गं, भक्तानां चरितानि, धार्मिकताध्यात्मिकग्रन्थपरिचयं सुलभभाषया समाजाय प्रदत्ता। न केवलमेतदेव। श्रीनिवासालये, अनुबन्धालयेषु निर्वर्तितोत्सवविशेषाः, पूजाकैंकर्याः पर्वदिनाचरणविधानानि सविवरणपूर्वकं अस्यां पत्रिकायां सन्दर्भोचितरीत्या मुद्रिताः भवति।

देवस्थानं पत्रिकायाः सप्तगिरीणां सप्तगिरीशस्य प्रतीकया 'सप्तगिरि' इति नाम स्थापितः। तन्नम्नैव सप्तगिरीशं सप्तगिरीणां मनसि संस्मरामः। कालानुगुणं अनेकपत्रिकाः आगताः। परन्तु अस्याः पत्रिकायाः स्थानं न विचलिता। शिष्टसाहित्यतः विशिष्ट साहित्यपर्यन्तं आध्यात्मिकतायाः प्रामुख्यतां प्रदत्तां पत्रिकां सप्तगिरीं संस्मर्तव्या। बालकानां, ज्येष्ठानां आनन्दोल्लासां, जिज्ञासां संवर्धिष्यमाणा उत्तम पत्रिका 'सप्तगिरि'।

इदानीं सप्तगिरिमासपत्रिकामारभ्य पञ्चाशतत्वर्षाणि वसन्तानि २०२० मेमासे पूरणं भवन्ति। अस्मिन्संदर्भे २०२० जनवरिमासपत्रिकायां सप्तगिरिमासपत्रिकेनानेक - परिवर्तनानानीतवन्तः। अद्य बीजमेव स्वः वृक्षः भवति। देशभवितव्योज्वलप्रकाशनाय छात्राः मानवीयमूल्यैः वर्धनं आवश्यकं भवति। तिरुमल तिरुपति देवस्थानं एतदर्थं चरणं स्थापयति। छात्राणां कृते प्रत्येकतया 'बालसप्तगिरि' नाम्ना विंशतिपुटानुबन्धमानेतुं तिरुमल तिरुपति देवस्थानं निर्णयं स्वीकृतः दाससाहित्यं, आल्वर्त्साहित्यं हिन्दूदेवताः, बालनीतिः, चित्रकथा, रसप्रश्नाः, चित्रलेखनमित्यादिनी छात्रभाषया 'बालसप्तगिरिः' आगच्छति। बालबालिकाणां अस्माकंसंस्कृतेः, धर्मं पुराणं, भगवतोपरि, ज्येष्ठानामुपरि सम्यक् अवगाहनं कल्पयितुं, आध्यात्मिकालोचनानि अभिवृद्ध्यर्थं ये 'बालसप्तगिरिं' प्रारम्भं कृताः।

बहवः कवयः, रचयिताः सृजनात्मिकरचनैः अस्माकाध्यात्मिकरङ्गं सुसम्पन्नार्थं तेभ्यः कवीभ्यः, रचयितेभ्यः पात्रत्वेनस्सह तादृश रचनानि प्रचुरित पत्रिकाणां पात्रत्वमपि बहुधा वर्तते। रचयिताः भावं लक्षाधिकजनानां कथयितं इदानीमपि अस्माकं समाजे धर्मं, न्यायं इत्यादिमूल्यानि समुन्नतया उपस्थापयितुं पत्रिकाः स्वकीयं कर्तव्यं शतं निर्वहन्तीति निःसन्देहतया कथितुं शक्यते। आधुनिकता विस्तारणसमये आध्यात्मिकपत्रिकाणामाधरणं न्यूनतां न गता। पुनः इतोऽपि वर्धनं एकं घनकार्यमेव। अस्माकं आध्यात्मिकतायाः साधित उन्नतेः प्रतीकत्वं भवति। दशाधिकाध्यात्मिकपत्रिकाः अस्माकं राष्ट्रे आर्विर्भूय आन्ध्रदेशं आध्यात्मिककेन्द्रतया परिवर्तनगतिं जानीमः। एतेषां सर्वेषामग्रताम्बूलं निस्सन्देहतया ति.ति.दे. निर्वहण 'सप्तगिरेः' एव।

# नृसिंहावतारः



- माधवीवेंकटेशन्
चरवाणी - ७३७६७४८६३२

**सटाकरालभ्रमणानिलाहताः
स्फुटन्ति यस्याम्बुधरास्समन्ततः।
स दिव्यसिंहः स्फुरितानलेक्षणो
ममास्तु माङ्गल्यविवृद्धये हरिः॥**

भक्तप्रियेण भगवता नारायणेन स्वभक्तस्य प्रह्लादस्य रक्षणार्थं दुष्टस्य हिरण्यकशिपोर्निग्रहार्थं च नृसिंहरूपं धृतम्। एकदा सनकादयो महर्षयः भगवतो नारायणस्य दर्शनार्थं श्रीवैकुण्ठमगच्छन्। तत्र जयविजयाख्यौ द्वारपालकौ भगवतो विष्णोर्निर्देशेन तान् महर्षीन् द्वारे एवावरुद्धवन्तौ क्रुद्धास्ते ऋषयः 'युवां मर्त्यलोके राक्षसरूपेण जन्म लभेयाम्' इति तौ शप्तवन्तः। अत एतावेव हिरण्याक्षहिरण्यकशिप्वाख्यौ भ्रातरौ दितिसुतरूपेण भूमिमागतौ। एतयोः शापविमोचनं भगवता वराहरूपं नृसिंहरूपं च धृतम्। हिरण्याक्षः अतिवीर्यवान् आसीत्। स सर्वान् देवान् पीडयामासा वेदानपि मुमोष। पीडिताः देवताः तस्माद्भीताः पृथिव्यां पर्वतगुहासु न्यलीयन्त। तान् पीडयितुं स पृथिवीमेव पाताललोके क्षिप्तवान्। एतादृशस्य हिरण्याक्षस्य विनाशाय, पृथिव्याः, लोकानां चोद्धारणाय वराहरूपी महाविष्णुः अवतीर्य हिरण्याक्षं समहरत्।

हिरण्यकशिपुः एकः महान् राजा आसीत्। तस्य कयाधुनाम्नी साध्वी पत्नी, प्रह्लादनामा महान् विष्णुभक्तः पुत्रश्च आस्ताम्। स्वभ्रातुः हिरण्याक्षस्य विनाशयितारं महाविष्णुं प्रति हिरण्यकशिपोर्मनसि तीव्र द्वेषः आसीत्। सः स्वस्य तपसा ब्रह्माणं तोषयित्वा एतादृशं वरं लेभे तस्य मृत्युः न मनुष्येण न वा मृगेण भवेत्, नान्तः न वा बहिर्भवेत्, न दिवा न वा नक्तं भवेत्, न भूमौ न वा वायौ भवेत्, न वा केनापि आयुधेन भवेदिति।

ब्रह्मणः सकाशाद्वरं प्राप्य, आत्मानं मृत्युञ्जयं मन्यमानः अत्यन्तं गर्वितोऽभूत्। 'सर्वत्र मत्तः अन्यः कोऽपि ईश्वरो नास्ति, अहमेव संर्वेषां प्रभुरास्मि, नारायणं विहाय मामुद्दिश्य पूजनादिकर्माणि विधातव्यानि सर्वैः मम नाम एव जप्तव्यम्' इत्यादिकं प्रजाभ्यः उपदिश्य, स्वोपदेशस्य प्रजाभिः पालनं कारयामास, स्वाज्ञायाः उल्लङ्घनकर्तॄन् दण्डयति स्म च। भीतास्सर्वे जनाः राजानमेव पूजयान्ति स्म परन्तु हिरण्यकशिपोः पुत्रः प्रह्लादः महाविष्णुमेव स्मरति स्म, पूजयति स्म। पाठशालायामाचार्यैः हिरण्यकशिपोराज्ञा पालनीया इति शिक्षितोऽपि सः विष्णुभक्तेर्नैव व्यचलत्। सहाध्यायिनोऽपि स विष्णुभक्तिमुपदिशति स्म। पुत्रेण क्रियमाणं स्वाज्ञोल्लङ्घनं ज्ञात्वा हिरण्यकशिपुरत्यन्तं क्रुद्धोऽभूत्। श्रीमन्नारायणो न प्रभुः परन्त्वहमेव सर्वप्रभुरस्मीति पुनाश्शिक्षयामास। परन्तु प्रह्लादः एतन्नैव स्वीकृतवान्, कुपितः राक्षसेश्वरः भृत्यान् प्रह्लादस्य वधं कर्त्तुमादिदेश।

भृत्याः प्रह्लादं शूलैः अपीडयन्। परन्तु प्रह्लादः ईषदपि न बाधितः। एतत् दृष्ट्वा विस्मितो हिरण्यकशिपुः सर्पैः मायापाशैः, पर्वतशिखरात् पातनेन, अभोजनने, जलनिमज्ञनेन, अग्निना च हन्तुं प्रयत्नं कृतवान्। हिरण्यकशिपोः सर्वेऽपि प्रयासाः निष्फलाः सञ्जाताः।

हिरण्यकशिपुः पुनः प्रह्लादमाहूय मदन्यः कोऽपि जगदीश्वरो नास्तीति उपदिदेश। परन्तु प्रह्लादः नैव स्वीकृतवान्। क्रुद्धो हिरण्यकशिपुः पृष्टवान् मदन्यः कोऽपि जगदीश्वरोऽस्ति वा? यदि स ईश्वरः सर्वत्रास्ति, तर्हि कथं स स्तम्भेन दृश्यते? त्वामहमिदानीं हन्मि, स हरिरागत्य त्वां कथं रक्षतीति पश्यामीति।

एवमुक्त्वा स खड्गं हस्ते गृहीत्वा सिंहासनात् प्रह्लादं प्रहर्त्तुं मागच्छन् मध्ये स्तम्भं स्वमुष्टिना तताड। तदानीमेव बद्धाञ्जलिना प्रह्लादेन विलोक्यमानात् स्तम्भात् अतिगम्भीरनिनादेन सह कण्ठस्याधः मनुष्यरूपः, कण्ठादूर्ध्वं मृगेन्द्ररूपः भगवान्नारायणः आविरभूत्।

खड्गहस्तं हिरण्यकशिपुं न भूमौ न वा आकाशे अपितु स्वाङ्के शाययित्वा, न दिवसे न वा रात्रौ, अपितु सायङ्काले, नान्तर्नबहिः अपितु द्वारस्थाने कस्यापि आयुधस्य साहाय्यं विना स्वनखैरेव, न मनुष्यः न वा मृगः, अपितु नरमृगरूपः भगवान्नारायणः विदारयामास।

हिरण्यकशिपोः वधानन्तरं ब्रह्मादयस्सर्वे देवाः नृसिंहरूपिणं भगवन्तमस्तुवन्। अनन्तरं प्रह्लादेन स्तुतो भगवान् प्रह्लादस्य राज्येऽभिषेचनानन्तरमन्तर्हितोऽभूत्।

एवं भगवान् सर्वदा स्वभक्तानां विविधैः रूपैः आगत्य रक्षणं करोतीति ज्ञायते।



# तरिगोण्ड वेङ्गमाम्बा

- वि.प्रदीप् कुमारः
चरवाणी - ९४९१६४६५३२



वेङ्गमाम्बा अष्टादशशताब्दसम्बद्धा एका तेलुगु भाषाकवयित्री। विशेषतया तिरुमलवासिनः श्रीवेङ्कटेश्वरस्वामिनः भक्ता आसीत्। एषा चित्तूरु जिल्ला, गुर्रङ्कोण्ड मण्डले तरिगोण्ड इतिग्रामे जन्म प्राप्तवती। (आन्ध्रप्रदेशे) एतस्याः जन्मकालः क्री.श.१७३०। एतस्याः पितरौ वशिष्ठगोत्रोत्पन्नः 'कोनाल कृष्णय्य तथा मङ्गमाम्बा इति नन्दवरीकब्राह्मण दम्पती।

एतस्याः भक्त्युद्रेकेण (अधिकभक्तिवशात्) यथा बालाः क्रीडन्ति तथा न क्रीडन्तीसति एकान्ते उपाविशत् स्म। एतादृश बाल्यावस्थायां एव भक्तिगीतानि अगायत् मधुरवाण्या। तस्याः पिता वेङ्गमाम्बायाः भक्तिश्रद्धादीन् विज्ञाय नैपुण्याभिवृद्धये 'सुब्रह्मण्यदीक्षितः'' इति नामकगुरोः समीपं प्रेषितवान्। दीक्षितोऽपि तस्याः प्रतिभामुग्धः सन् सर्वं तस्यै बोधितवान्। तस्याः विषयं अतिशीघ्रमेव सर्वे विज्ञाताः इति तां गृहं प्रति आनीय यथोचितानुरूपवरं तस्याः पिता अन्विषन्नासीत् स्म।

एवमेव माता यदा तस्यै गृहकार्याणि वदति तदा सा ''मम सेवा तु केवलं भगवते अर्पयामि'' इति उक्त्वा तिरस्कारं अकरोत् स्म।

''वेङ्कटाचलप्प'' नामकः तां दृष्ट्वा प्रेम्णा मुग्धः सन् तां वोढुं (विवाहं कर्तुं) अङ्गीकृतवान् अनन्तरं विवाहो जातः। वेङ्कटाचलप्प तु तां तस्याः मूढतां (विशेषभक्तिं) दूरीकर्तुं बहुधा प्रयत्नं कृतवान् किन्तु तस्याः समीपमागन्तुं अपि अवकाशं न दत्तवती सा।

एषा तिरुमलालयस्य उत्तरस्यां दिशि १५ कि.मी. दूरे गूढारण्ये 'तुम्बुरुकोन' इति स्थलसमीपे योगाभ्यासपूर्वकं कालं अयापयत् इति प्रतीतिः अस्ति। एतस्याः स्वप्ने श्रीवेङ्कटेशस्य दर्शनं प्राप्ता इत्यपि प्रतीतिरस्ति। (तिरुमले उत्तरदिशि एकस्मिन् वने एतस्याः समाधिः अधुनापि दरीदृश्यते)

एषा आजीवनं श्रीवेङ्कटेशाराधनं कृतवती। क्री.श.१८१७ ईश्वरनामकवत्सरे श्रावणमासे शुक्लपक्षे नवमीतिथौ वेङ्कटेशस्मरणपूर्वकं सजीवसमाधिं प्राप। वेङ्गमाम्बया रचितानि काव्यानि सर्वाण्यपि 'भक्ति' प्रधानान्येव। तत्रापि मुख्यानि काव्यानि कानिचन वदामि।

**पद्यकाव्यानि-** १. वेङ्कटाचलमहात्म्यमु २. अष्टाङ्गयोगसारमु।

**द्विपदकाव्यानि-** १. द्विपदभागवतमु (द्वादश स्कन्धः), २. रमापरिणयमु ३. राजयोगामृतसारमु, ४. वाशिष्ठ रामायणमु इत्यादीनि।

**शतककाव्यानि -** १. श्रीकृष्णमञ्जरी, २. तरिगोण्ड नृसिंहशतकमु इत्यादीनि।

**यक्षगानानि -** १. नृसिंहविलासमु २. शिवलीलाविलासमु ३. बालकृष्णनाटकमु ४. विष्णु पारिजातमु ५. रुक्मिणीनाटकमु ६. गोपीनाटकमु ७. चेञ्चुनाटकमु ८. मुक्तिकान्ताविलासमु ९. जलक्रीडाविलासमु इत्यादीनि एवं बहु तत्त्वकीर्तनान्यपि अनया रचितानि वर्तन्ते।

एषा गम्भीरान् योगरहस्यान् सरल-सुन्दरभावगर्भित मधुरशैल्या स्वकाव्यगीतादिषु उक्तवती। एवं प्रणयकोपान् मात्सर्यविषयान् नर्मगर्भित सम्भाषणानि, स्त्रीणां व्यङ्ग्य वचनानि श्रीकृष्णस्य रासलीलाः च सहजतया, रसास्वादनरीत्या, हृदयान्तरालेषु मधुरभावना जनकरीत्या स्वकाव्यादिषूक्तवती।

एषां गातुं योग्याः रचनाः 'लालि' गानादयः लिखितवती।

जनवरी मासस्य प्रथमदिनाङ्के एवं इतरेषु पर्वदिनेषु तरिगोण्ड श्रीलक्ष्मीनृसिंहस्वामिनः आलये वेङ्गमाम्बायाः प्रतिमां पूजयन्ति तत्रत्यजनाः।

एवं उत्तरमाडवीथिमध्ये एतस्याः गानपूर्वकं आरतिकरणानन्तरमेव ब्रह्मोत्सवसमये ततः अग्रे गच्छति रथः इति कारणात् तस्याः नाम्नि ''तरिगोण्ड मुत्याल हारति'' इति सेवां एकां निर्मितवन्त इति प्रतीतिरस्ति।

वेङ्गमाम्बाया अनन्तरं तस्याः दत्तपुत्रिका आरति कुर्वती आसीत्। एषा एव परम्परा अधुनापि प्रचलति स्म।



# एषः कर्मभूमिः

तेलुगु मूलम् - डा।। वैष्णवांङ्घ्रि सेवकदासः
अनुवादकर्त्री - डा. एम्. प्रफुल्ला
चरवाणी - ९४४०२८५९८५

अधुना वयं कर्मस्थाने स्थिताः स्मः। ऊर्ध्वलोकाः भोगस्थानमिति, अधोलोकाः दुःखस्थानमिति कथ्यन्ते। वयं अनयोर्मध्ये कर्मस्थाने स्थित्वा भोगदुःखावुभौ अनुभवामः। तथापि सर्वजीविनां प्रधानलक्षणं, लक्ष्यं च कर्माचरणमेव। न केवलं मानवाः पशुपक्ष्यादयः अपि कार्ये रताः भवन्ति। एषः जीविनां सहजस्थितिः। लोके निष्क्रियाः पशुपक्ष्यादयः न दृश्यन्ते, किन्तु केवलं मानवाः। ब्राह्मणक्षत्रियवैश्यशूद्रेषु एकैकस्यापि जनस्य तस्य गुणानुरूपं वेदविहित कर्माणि निर्णीतानि। तादृश कर्म विभागः भगवद्गीतायामेव उक्तमस्ति। ये जनाः बुद्धिं उपयुज्य लोककल्याणार्थं कार्याणि कुर्वन्ति ते ब्राह्मणाः। तैर्दत्तेन बुद्धिबलेन, भुजबलेन च ये प्रजापालनं कुर्वन्ति ते क्षत्रियाः। ब्राह्मणाशीर्वादेन, क्षत्रियदत्तरक्षणेन ये व्यापारव्यवसाय गोरक्षणादि कर्म कुर्वन्ति ते वैश्याः। अथ ये ब्राह्मणक्षत्रियवैश्यान् विनयेन सेवन्तः तेषां आश्रये आनन्देन, आरोग्येन च जीवन्ति ते शूद्राः।

कर्म किमर्थं कुर्यादिति पृच्छेत् उत्तरं एवं विद्यते - अस्मासु यत् किञ्चित् अनुपस्थितं अस्ति तं प्राप्तुं कर्म कुर्यात्। किन्तु भगवद्विषये एतादृशस्थितिः न विद्यते। सर्वमिदं विश्वं तेन सृष्टम्। '' ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत्'' - अतः अस्मिन् जगति सर्वं तदीयं, न किञ्चिदस्ति परकीयम्। तथापि यदा भगवान् अस्मिन् जगति अवतरति तदा सः अपि कर्म करोति।

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।**
**नानवाप्तव्यमवाप्तव्यं वर्त एव च कर्मणि।।**
**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः।।**
**भग. गी.३-२२.२३**

इति श्रीकृष्णभगवानुवाच। अर्थात् त्रिषु लोकेषु तेन किंचिदपि करणीयं नास्ति। यतः तेन प्राप्तव्यं, अप्राप्तव्यं अपि नास्ति। परन्तु सः अलसः भवति चेत् सर्वे मानवाः अलसाः भवन्ति। अतः सः कर्म कुर्वन्नेव वर्तते। एकैकः अपि, विशेषतः युवानः निष्क्रियाः न भवेयुः। जनाः सक्रियाः भवितुं उत्साहः, निश्चयात्मक बुद्धिः, धृतिः आवश्यकाः। जनाः बुद्धिं उपयुज्य योजनां विरच्य, लक्ष्यं निर्दिश्य जीवनं यापयेयुः। अलसत्वं, भोगवाञ्छां पूर्णतया परित्यजेयुः। तदा मनश्शान्तिं, आरोग्यं, आनन्दं प्राप्नुवन्ति। जनाः उद्योगविरमणानन्तरं षष्टिपूर्त्यनन्तरं सर्वाणि कार्याणि परिसमाप्तानीति, न किञ्चित् करणीयमस्तीति मन्यन्ते। यदा भगवान् स्वयं कर्म कुर्वन् अस्ति तदा मानवमात्राणां विषये वक्तव्यं किमस्ति। एकैकस्यापि जनस्य वयोविद्याशक्तिकालानुरूपं कर्माणि कर्तव्यानि सन्ति। ''मनोनुरूपं मार्गं विद्यते'' इति उक्तिः। ''अहं जीवितान्तं आनन्देन कर्म कुर्वन् जावामि'' इति कोऽपि मन्यते तस्य अद्भुतावकाशाः, अरोग्यः - सर्वं उपपद्यति। तादृशाः जनाः दीर्घायुषा, आनन्देन जीवन्ति। अतः भगवद्गीतोपदेश मनुसृत्य कार्योन्मुखाः भवेयुः।



## श्रीमदाञ्जनेयाष्टोत्तरशतनामावळी

ॐ आञ्जनेयाय नमः
ॐ महावीराय नमः
ॐ हनुमते नमः
ॐ मारुतात्मजाय नमः
ॐ तत्त्वज्ञानप्रदाय नमः
ॐ सीतादेवीमुद्राप्रदायकाय नमः
ॐ अशोकवनिकाच्छेत्रे नमः
ॐ सर्वमायाविभञ्जनाय नमः
ॐ सर्वबन्धविमोक्त्रे नमः
ॐ रक्षोविध्वंसकारकाय नमः (१०)

ॐ परविद्यापरिहर्त्रे नमः
ॐ परशौर्यविनाशनाय नमः
ॐ परमन्त्रनिराकर्त्रे नमः
ॐ परयंत्रप्रभेदकाय नमः
ॐ सर्वग्रहविनाशकाय नमः
ॐ भीमसेनसहाय्यकृते नमः
ॐ सर्वदुःखहराय नमः
ॐ सर्वलोकचारिणे नमः
ॐ मनोजवाय नमः
ॐ पारिजातद्रुमूलस्थाय नमः (२०)

ॐ सर्वमंत्रस्वरूपवते नमः
ॐ सर्वतंत्रस्वरूपिणे नमः
ॐ सर्वयन्त्रात्मिकाय नमः
ॐ कपीश्वराय नमः
ॐ महाकायाय नमः
ॐ सर्वरोगहराय नमः
ॐ प्रभवे नमः
ॐ बलसिद्धिकराय नमः
ॐ सर्वविद्यासम्पत्प्रदायकाय नमः
ॐ कपिसेनानायकाय नमः (३०)

ॐ भविष्यच्चतुराननाय नमः
ॐ कुमारब्रह्मचारिणे नमः
ॐ रत्नकुण्डलदीप्तिमते नमः
ॐ चञ्चलद्वालसन्नद्धलंबमानशिखोज्ज्वलाय नमः
ॐ गन्धर्वविद्यातत्त्वज्ञाय नमः
ॐ महाबलपराक्रमाय नमः
ॐ कारागृहविमोक्त्रे नमः
ॐ श्रृंखलाबन्धमोचकाय नमः
ॐ सागरोत्तारकाय नमः
ॐ प्राज्ञाय नमः (४०)

ॐ रामदूताय नमः
ॐ प्रतापवते नमः
ॐ वानराय नमः
ॐ केसरीसूनवे नमः
ॐ सीताशोकनिवारणाय नमः
ॐ अञ्जनागर्भसंभूताय नमः
ॐ बालार्कसदृशाननाय नमः
ॐ विभीषणप्रियकराय नमः
ॐ दशग्रीवकुलांतकाय नमः
ॐ लक्ष्मणप्राणदात्रे नमः (५०)

ॐ वज्रकायाय नमः
ॐ महाद्युतये नमः
ॐ चिरञ्जीविने नमः
ॐ रामभक्ताय नमः
ॐ दैत्यकार्यविघातकाय नमः
ॐ अक्षहन्त्रे नमः
ॐ काञ्चनाभाय नमः
ॐ पञ्चवक्त्राय नमः
ॐ महातपसे नमः
ॐ लंकिणीभञ्जनाय नमः (६०)

ॐ श्रीमते नमः
ॐ सिंहिकाप्राणभञ्जनाय नमः
ॐ गन्धमादनशैलस्थाय नमः
ॐ लंकापुरविदाहकाय नमः
ॐ सुग्रीवसचिवाय नमः
ॐ धीराय नमः
ॐ शूराय नमः
ॐ दैत्यकुलान्तकाय नमः
ॐ सुरार्चिताय नमः
ॐ महातेजसे नमः (७०)

ॐ रामचूडामणिप्रदाय नमः
ॐ कामरूपिणे नमः
ॐ पिङ्गलाक्षाय नमः
ॐ वर्धिमैनाकपूजिताय नमः
ॐ कबलीकृतमार्ताण्डमण्डलाय नमः
ॐ विजितेन्द्रियाय नमः
ॐ रामसुग्रीवसंधात्रे नमः
ॐ महिरावणमर्दनाय नमः
ॐ स्फटिकाभाय नमः
ॐ वागधीशाय नमः (८०)

ॐ नवव्याकृतिपण्डिताय नमः
ॐ चतुर्बाहवे नमः
ॐ दीनबन्धवे नमः
ॐ महात्मने नमः
ॐ भक्तवत्सलाय नमः
ॐ संजीवननगाहर्त्रे नमः
ॐ शुचये नमः
ॐ वाग्मिने नमः
ॐ धृतव्रताय नमः
ॐ कालनेमिप्रमथनाय नमः (९०)

ॐ हरिर्मर्कट मर्कटाय नमः
ॐ दान्ताय नमः
ॐ शान्ताय नमः
ॐ प्रसन्नात्मने नमः
ॐ दशकण्ठमदापहाय नमः
ॐ योगिने नमः
ॐ रामकथालोलाय नमः
ॐ सीतान्वेषणपण्डिताय नमः
ॐ वज्रदंष्ट्राय नमः
ॐ वज्रनखाय नमः (१००)

ॐ रुद्रवीर्यसमुद्भवाय नमः
ॐ इन्द्रजित्प्रहितामोघब्रह्मास्त्रविनिवर्तकाय नमः
ॐ पार्थध्वजाग्रसंवासाय नमः
ॐ शरपञ्जरहेलकाय नमः
ॐ दशबाहवे नमः
ॐ लोकपूज्याय नमः
ॐ जाम्बवत्प्रीतिवर्धनाय नमः
ॐ सीतासमेतश्रीरामपादसेवादुरंधराय नमः(१०८)

।।इति श्रीमद् आञ्जनेयाष्टोत्तरशतनामावली सम्पूर्णा।।





करोना व्याधेः विपदः जनसमूहः
संरक्षणीयः इति महदाशयेन
ति.ति.दे. समाचरित
श्री श्रीनिवास शान्त्युत्सव
सहित धन्वन्तरि महायागः,
श्रीनिवास वेदमन्त्र
आरोग्यजपयज्ञ दृश्याणि।












# अन्नमाचार्यजीवनचरित्रम्

तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्
संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी
चरवाणी - ९४४०८४८८५८

अन्नमाचार्यः श्रीनिवासवरप्रसादेन तत्समानान् पुत्रान् प्राप्तवान्। तेषु नरसयाचार्यः ज्येष्ठः। द्वितीयः तिरुमलाचार्यः। नरसयाचार्यः अन्नमाचार्यस्य ज्येष्ठभार्या तिरुमलम्भ तिरुमलम्बायाः पुत्रः। कनिष्ठायाः अक्कलम्मायाः पुत्रः तिरुमलाचार्यः। एषः तिरुमलाचार्यः एव '' पेदतिरुमलाचार्य'' इव प्रसिद्धः।

नाच्चारम्मा, अनन्तम्मा इति नरसयाचार्यस्य पत्न्यौ। नारायणाप्पळार्यान्नियार्याः तस्य पुत्राः। पेदतिरुमलाचार्यस्य पत्नी तिरुमलम्मा। चिनतिरुमलय्या, अन्नय, पेदतिरुवेङ्गलनाथः तिरुवेङ्गलनाथः (चिन्नन्न) कोनेटि तिरुवेङ्गलनाथः पेदतिरुमलाचार्यस्य पुत्राः। एका पुत्री अन्नमाचार्यस्य। सा तिरुमलाम्बा। तस्याः पतिः तिरुमल कोण्डयार्यः। रेवणूरी वेङ्कटाचार्यः एतस्य पुत्रः। एवं वर्धितः अन्नमाचार्यस्य कुटुम्बः स्वपदरचनाभिः कलियुगप्रत्यक्षदैवस्य श्रीवेङ्कटेश्वरस्य सेवायां कृतकृत्याः सञ्जाताः एव। पण्डितकुटुम्बेऽस्मिन् पण्डितपरिवारेऽस्मिन् सर्वेऽपि पण्डिताः एव इति कथने अतिशयोक्तिरेव नास्ति।

**नारायणः -** अन्नमाचार्यस्य प्रपितामहः विठ्ठलः। एतस्य पुत्रः एव नारायणः। स्व पुत्राय नारायणाय गुरुः भवितुं विठ्ठलस्य इच्छाऽसीत्। यतः पिता एव पुत्रस्य आद्यः गुरुः इति प्रथा अद्यत्वे हासाय भवति किन्तु वैदिकपरम्परायाम् एषा एव प्रथा भवति स्म। अतः विठ्ठलः एव पुत्रं पाठयितुं प्रयत्नं कृतवान्।

किन्तु नारायणः विद्यां सम्यक् नाभ्यसन्नस्तीति मत्वा राजम्पेट समीपे विद्यमान ऊटुकूरु ग्रामे तेषां बान्धवानां गृहे संस्थाप्य अन्यस्य गुरोः समीपं प्रेषितवान्। ते बान्धवाः नारायण स्वपुत्रमिव पालितवन्तः। ऊटुकूरु पाठशालायामपि नारायणस्य विद्याभ्यासप्रक्रियायां पुरोगतिरेव नासीत्। पाठशालायाः अध्यापकः नारायणस्य विद्याभ्यासप्रक्रियायां पुरोगतिसम्पादनाय बहुधा प्रयत्नं कृतवन्तः।

गोटुकुचु.... (तेलुगु श्लोकः)

(अन्नमाचार्य चरित्र द्विपद पुट ७८, ७९)

प्रारम्भे यदा शिशुः विद्यालये प्रविशति तदा तत्रस्थाः अध्यापकाः तस्यां विद्यमानां भीतिं दूरीकर्तुं प्रयत्नं कुर्वन्ति।

तस्यामेव प्रक्रियायां एतत् पठतु, तत पठतु, सः यथा पठति तथा पठतु इति वदन्ति। नारायणस्य विषयेऽपि एषा एव पद्धतिः आसीत्। लालितः, पालितः, दण्डितश्च। तथापि पुरोगतिः नासीत्। यः मार्गः आचरणीयः तत्सर्वमपि आचरितः तथापि स्थितिः सम्यक् न जातः। गुरुणा दत्तं दण्डं स्वीकृत्य, अन्यथा शरणं नास्तीति मत्वा रुधति स्म। अन्ततो गत्वा निराशो भूत्वा ऊटुकूरु ग्रामदेवता चिन्तलम्मायाः देवालये वल्मीकोऽस्ति तत्रा पि महासर्पः अस्तीति ज्ञात्वा, तस्मिन् वल्मीके हस्तं संस्थाप्य प्राणत्यागः करणीयः इति निश्चितः नारायणः अतीव खेदेन गत्वा ग्रामदेवताया आलये प्रविश्य वल्मीके हस्तं संस्थाप्य प्राणत्यागं कर्तुमुद्यक्तः।सर्वकालसर्वज्ञा सा माता बालकं दृष्ट्वा आर्दा सञ्जाता। मनुष्यरूपेण आगत्य तं वारितवती। यदि सर्पः दंशति तर्हि ताल्लपाकवंशस्थ स्थगनं तत्रैव भवति स्म। तदा सङ्गीतसाहित्ययज्ञं भवति वा? सुप्रभातदारभ्य एकान्तपर्यन्तं आचर्यमाणाः सेवाः श्रीनिवासाय भवन्ति वा? ३२,००० सङ्कीर्तनानां श्रवण सौभाग्यमस्माकं भवति वा? साहित्यवारसत्वं भवति वा? तदर्थमेव भूतभविष्यद्वर्तमानज्ञा सा माता नारायणं वारितवती। नारायणस्य मनोगतं ज्ञात्वा सकलविद्यानामधिदेवता सरस्वत्याः श्वसुरः केशवनामं धृत्वा ताल्लपाकायामस्ति। तामरसाप्तनयनस्य तस्य श्रीहरेः मन्दिरं गत्वा प्रदक्षणान् कृत्वा तं भक्त्या प्रार्थयतु। भवतः अभीष्टः परिपूर्णो भवति। अपि च भवतः वंशे तृतीयतरे शाश्वत यशस्वी, परमभक्तः, लोकानां प्रीतिकारकः वैकुण्ठनिकेतनस्य वरप्रभावेन जन्म प्राप्नोति इत्युक्त्वा अन्तर्थानमभवत्।

तदा नारायणः ताल्लपाक ग्रामं प्रति गत्वा कोटिसूर्यकान्तिभिः प्रकाशमानस्य केशवस्वामिनः दर्शनमकरोत्। आलये प्रदक्षणान् कृत्वा ''अन्यथा शरणं नास्ति, त्वमेव शरणं मम'' महयं विद्यां प्रददातु इति प्रार्थितवान्। भक्त प्रार्थना एव अलं तस्मिन्नेव क्षणे वरान् प्रसादयति सः श्रीनिवासः तदपि स्व अंशया स्व वरप्रभावेन जातानां कारणजन्मनामुपरि तस्य आशीर्वचनं न वर्षयति वा? प्रार्थनां श्रुत्वैव तथास्तु इत्यकथयत्। तत्फलिततया एव सा विद्याधिष्ठानधात्री, हाठकगर्भुराणी, कैटभदैत्यमर्थस्य स्नुषा सरस्वती नारायणस्य जिह्वाग्रे सोपविष्टा। न केवलं नारायणं अपि तु ताल्लपाकवंशमेव अकटाक्षयत् सरस्वती। केशवस्वामिनः करुणया, सरस्वत्याः कृपया नारायणः विद्याकुशलः सञ्जातः। तदारभ्य गुरुणा बोधितं प्रत्येकमपि पाठं अधिगच्छति स्म। क्रम, शिखा, जटा पाठान् क्लेशं विना अधिगच्छति स्म।

नारायणः तथा विद्यार्जनं कृतवान् येन तस्य सहाध्यायिनः, गुरवः शास्त्रविशारदा आश्चर्यचकिताः भवन्ति स्म। तथा विद्यार्जनं कृत्वा, सर्वेषां प्रीतिपात्रो भूत्वा, सर्वज्ञः इति कीर्त्यमानः सन् ताल्लपाकां प्रति गतवान्।

**नारायणसूरिः -** तादृश सर्वज्ञनामधेयस्य नारायणस्य नारायणसूरिः सञ्जातः। एषः तस्य पिता इव सर्वासु विद्यासु निष्णातः भूत्वा, नाम्ना एव सूरिः न पाण्डित्यदिशा अपि सूरिः जातः। सूरिः नाम पण्डितः इत्यर्थः। नारायणसूरेः पत्नी लक्कमाम्बा। लक्कमाम्बा उत्तमा गृहिणी। मनोज्ञा, साध्वीमणी, परमभक्ता च। ताल्लपाकायाः किञ्चित् दूरे विद्यमानः मुड्डुपूरुप्रान्ते विद्यमानः माधवमूर्तिः (अर्चावतारः) एतस्याः प्रार्थनां श्रुणोति, स्मरणेनैव प्रत्यक्षो भवतीति प्रतीतिः।

एतयोः पुण्यदम्पत्योः वैवाहिकजीवनं लोकस्य आदर्शप्रायः जातः। एकस्मिन् दिने एतौ द्वौ पुन्नामनरकरक्षकः वंशोद्धारकः पुत्रः आवश्यकः इति वेङ्कटेश्वरं प्रार्थितवन्तौ। तिरुमलां गत्वा गरुडस्तम्भस्य समीपे स्थित्वा ''वंशोद्धारकं पुत्रं ददातु'' कुलोद्धारकं पुत्रं देहि'' इति वेङ्कटेश्वरं प्रार्थिवन्तौ। आडिगिनयपुडे .....(अन्नमाचार्यचरित्रम् द्वि.पुट १००)

भक्तजनवत्सलः वेङ्कटेश्वरः एकदा एकस्मिन् रात्रौ सप्ने साक्षात्कृत्या नन्दकं प्रदत्तवान्। तयोः दम्पत्योः आनन्दस्य अवधयः एव नासन्। कोटिजन्मस्वपि असाध्यं विष्णुदर्शनं, बहुतपस्याऽपि अलभ्यमानं स्वामिनः दर्शनम्, धृवप्रह्लादाम्बरीषेभ्यः एव प्राप्तं श्रीहरेः निजदर्शनभाग्यं तयोः दम्पत्योः स्वप्ने जातः। तयोः द्वयोर्मध्ये एकस्यैव स्वप्ने साक्षात्कारो भवति चेत् तत् यादृच्छकमेव। किन्तु द्वाभ्यामापि एकः एव स्वप्नः आगतः। सैव दैवसंकलपः तेषां स्वप्नः परिपूर्णः जातः इति आनन्देन ग्रामं गतवन्तः।





# हनुमज्जयन्तिः

- डा.एन्.उमादेवी
चरवाणी - ९९५१७३४४९४

प्रतिसंवत्सरं हनुमज्जयंति महोत्सवः केचित् चैत्रशुद्धपूर्णिमायां अन्ये वैशाखबहुलद्वितीयायां उत्सवत्वेन आचरन्ति। हनुमान् आदर्श पुरुषेषु प्रसिद्धः सकल जनैः आराधनीयः। हनुमान् बाल्यावस्थां अतिक्रम्य यौवनावस्थां प्राप्य संस्कृताद्यनेक भाषाः, व्याकरणादीनि शास्त्राणि, संगीताद्यनेककालः सम्यक् अभ्यसितवान्। अनेक भाषासु शास्त्रेषु संगीताद्यनेक कलासु च निष्णातः आसीत्। हनुमान् लंकानगरे सीतान्वेषणं कुर्वन् सीतया सह भाषण समये मनुजभाषां प्रयुक्तवान्। श्रीमद्रामायण कथायां हनुमान् सुग्रीवाश्रयं लब्ध्वा तस्य अमात्योभूत्वा श्रीरामसुग्रीवयोः मैत्रीं परीकल्प्य श्रीरामाद्वारा वालिहननं कारयित्वा अनन्तरं सीतान्वेषण तत्परः लंकानगरे सीतां दृष्ट्वा लंका दहनं कृत्वा श्रीरामचन्द्रस्य सीतादेव्याः सन्देशं निवेद्य रामरावण युद्धे स्वपराक्रमं प्रदर्श्य संजीवपर्वतं स्वहस्ते धृत्वा नीत्वा मूर्छितं लक्ष्मणं पुनर्जीवितं कृत्वा श्रीरामस्य अत्यन्तविश्वासपात्रः, सेवकः, महानुभावो भूत्वा जीवनं यापितवान्। अस्मिन् लोके श्रीराम इव यजमानः हनुमानिव सेवकश्च न संजातौ न संजनिष्येते। पुराणान्यनुसृत्य एक कल्पं जीवत्सु अष्टसु चिरंजीविषु हनुमानपि एकः वर्तते। नारद भीष्मादिभिरिव हनुमानपि ब्रह्मचारी अभवत्। अस्य महनीयस्य जन्मदिनं (जयंतिः) केचित् चैत्रमासपूर्णिमायां अन्ये वैशाखबहुलद्वितीयायां उत्सवत्वेन आचरन्ति।

आन्ध्रदेशीयाः - आञ्जनेयः

ग्रहपीडानां केषांचन उन्मादरोगाणां परिहारार्थं देवालये आंजनेयपूजां आलयप्रदक्षिणानि च कुर्मः। बालकानां भयनिवारणाय आंजनेय प्रतिमा निर्मितं यन्त्रं कण्ठेषु स्थापयामः। एष संप्रदायः बहोः कालात् सर्वत्र अनुष्ठीयते। बालकाः, युवानः, वृद्धाश्च भूतप्रेतपिशाच भय निवारणाय आपत्कालेषु आंजनेय दण्डकं इत्यादीनि स्तोत्राणि पठन्ति। आन्ध्रदेशे एष सम्प्रदायः बहोः कालात् प्रचलति। अस्माकं पुराणेषु आगम ग्रन्थेषु भगवद्विषये नवविधा भक्तिः वर्तते।

उदाः श्रवणं कीर्तनं पादसेवनं इत्यादयः। एतासु नवविधासु भक्तिषु सप्तमं दास्य भक्तिः। अस्याः एवं विधायाः भक्तेः हनुमानेव उदाहरणं, भगवद्भक्तेषु (दासेषु) अद्वितीयस्य आञ्जनेयस्य पूजा चैत्रपूर्णिमापर्वदिने उद्दिष्टा। अस्मिन् दिने सकलदेवतानां पूजनं दमनेन कर्तव्यमिति स्मृतिकौस्तुभग्रन्थे उक्तम्। तत्र शिवपूजा विशेषफल प्रदा। अस्मिन् दिने क्रियमाणानि स्नानदान अनुष्ठानादीनि साधारण दिनेषु क्रियमाणेभ्यः स्नान दानादिभ्यः दश गुणितं फलं प्रयच्छन्ति।

स्वामि शिवानन्दमहोदयः **HINDU FASTS AND FESTIVALS** नामके स्वकीयग्रन्थे भारतदेशे अनुष्ठीयमानान् सप्तविंशतिसंख्याकान् व्रतोत्सवान् स्वीकृत्य सम्यक् परिशीलितवान्। तत्र हनुमज्जयन्तिमहोत्सवः विविधप्रान्तेषु कथं प्रचलति, श्रीहनुमान् केन प्रकारेण जनैः आराध्यते, अस्य महोत्सवस्य सम्बद्धान् बहून् विषयान् विस्तरेण निरूपयामास।

प्राचीनकालादपि श्री हनुमज्जयंति व्रतं पुरुषसूक्तविधानेन पण्डितैः आचर्यते। तेषां उपदेश द्वारा इदीनीं तन कालपर्यन्तं अस्माभिः तनैव विधानेन अनुष्ठीयते। श्रीमद् आंजनेयस्य वैशिष्ट्यं महिमा विशेषाश्च हनुमत् सूक्ते, अष्टोत्तरशतनामस्तोत्रे, हनुमत् कवचे, पंचरत्न स्तोत्रे, विभीषणकृत आंजनेयस्तोत्रे, आंजनेयदण्डके, शङ्करकृत सङ्कटमोचनस्तोत्रे, श्रीरामरक्षास्तोत्रे आपदुद्धारक हनुमत्स्तोत्रे, पञ्चमुखवीर हनुमत् खड्गे इत्यादिषु सम्यक् विशदीकृताः, अस्य महोत्सवस्य आचरणेन कथा श्रवणेन च जनेषु भक्ति भावः उत्पद्यते।

श्रीहनुमत्सूक्तम्

श्रीमन्तो सर्वलक्षणसम्पन्नो जयप्रदः
सर्वाभरणभूषित उदारो महोन्नतोष्ट्रारूढः
केसरीप्रियनन्दनो वायुतनूजो यथेच्छं पम्पातीरविहारी
गन्धमादनसञ्चारी हेमप्राकाराञ्चितकनककदळीवनान्तरनिवासी
परमात्मा वनेचरशापविमोचनो
हेमकनकवर्णो नानारत्नखचिताममूल्यां मेखलां च स्वर्णोपवीतं
कौशेयवस्त्रं च बिभ्राणः सनातनो परमपुरषो
महाबलो अप्रमेयप्रतापशाली रजितवर्णः
शुद्धस्पटिकसङ्काशः पञ्चवदनः
पञ्चदशनेत्रस्सकलदिव्यास्त्रधारी
श्रीसुवर्चलारमणो महेन्द्राद्यष्टदिक्पालक-
त्रयस्त्रिंशद्गीर्वाणमुनिगणगन्धर्वयक्षकिन्नरपन्नगासुरपूजित
पादपद्मयुगलः नानावर्णः कामरूपः
कामचारी योगिध्येयः श्रीहनुमान्
आञ्जनेयःविराट्रूपिविश्वात्मा विश्वरूपः
पवननन्दनः पार्वतीपुत्रः
ईश्वरतनूजः सकलमनोरथान्नो ददातु।
इदं श्रीहनुमत्सूक्तं यो धीमानेकवारं पठेद्यदि
सर्वेभ्यः पापेभ्यो विमुक्तो भूयात्।

त्रेतायुगे द्वापरयुगे कलियुगे च (एतावत् कालपर्यन्तं) स्थितान् भक्तजनान् दृष्टान्तत्वेन स्वीकृत्य इदानींतन कालिकैः जनैरपि श्रीमद् आञ्जनेयः न केवलं व्रतदिने परन्तु सर्वकालं पुरुषसूक्तविधानेन पूजनीयो भवति। भक्तिश्रद्धाभ्यां तस्य आराधनेन सर्वेषां जनानां इष्टकाम्यार्थसिद्धिः भवति भविष्यति च।

## कार्यसिद्धि हनुमान् मन्त्रः

त्वमस्मिन् कार्य निर्योगे प्रमाणं हरिसत्तम।
हनुमान् यत्नमास्ताया दुःख क्षय करोभव।।



## हनुमान् गायत्री मन्त्रः

ॐ रामदूताय विद्महे कपिराजाय धीमहि।
तन्नो हनुमान् प्रचोदयात्।।
ॐ आंजनेयाय विद्महे महाबलाय धीमहि।
तन्नो मारुतिः प्रचोदयात्।।
ॐ अंजनीसुताय विद्महे वायुपुत्राय धीमहि।
तन्नो मारुतिः प्रचोदयात्।।
ॐ आंजनेयाय विद्महे पवन पुत्राय धीमहि।
तन्नो हनुमान् प्रचोदयात्।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



सुलभमोक्षमार्गः भक्तिमार्गः एव। अयं भक्तिमार्गः नवधा विभक्तः वर्तते। नवविधभक्तिमार्गविषये श्रीमद्भागवते एवं प्रोक्तम्।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।

आन्ध्रभक्तिकविसम्राट् पोतनामात्यः अपि स्वकीये आन्ध्रभागवते एवं प्रकारेण भक्तिमार्गाणां विषये उक्तवान्।

तनुहृद्भाषल सख्यमुन् श्रवणमुन् दासत्वमुन् वंदना
र्चनमुल् सेवयुनात्मलो नेरुकयुन् संकीर्तनल् चिन्तनं
बनुनी तोम्मिदिभक्तिमार्गमुल सर्वात्मुन् हरिन् नम्मि स
ज्ञनुडै युंडुट भद्रमंचु दलतुन् सत्यंबु दैत्योत्तमा

अस्माकं आर्षवाङ्मये नवविधभक्तिमार्ग-उपासकानां विषये उक्तम्।

श्रीविष्णोः श्रवणे परीक्षिदभवद्, वैयासकिः संकीर्तने
प्रह्लादः स्मरणे तदंघ्रिभजने लक्ष्मीः पृथुः पूजने
अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां फलम्।।

नवविधभक्तिमार्गेषु श्रवणेन परीक्षित्, कीर्तनेन शुकमहर्षिः स्मरणेन प्रह्लादः, पादसेवनेन महालक्ष्मीः, अभिवन्दनेन अक्रूरः दास्येन हनुमान् अर्चनेन पृथुमहाराजा, सख्येन अर्जुनः, आत्मनिवेदनेन बलिश्च कैवल्यं प्राप्तवन्तः। एतेषु भक्तिमार्गेषु दास्यभक्तिमार्गः श्रेष्ठतमः वर्तते। भगवति दासभावः इहपरसाधनाय, एहिकामुष्मिकफलाय च प्रबलोपकरणं भवति। एतदेव ''स्वतन्त्रमस्वतन्त्रञ्च द्विविधं सम्मतम्'' इति श्रीमध्वाचार्याणां प्रधानप्रबोधनम्। उपर्युक्तश्लोके दास्यभक्तेः लक्ष्यः हनुमान् इति उक्तः। वायुदेवः स्वस्य त्रिषु अवतारेषु हनुमभीममध्वाचार्यरूपैः रामकृष्णवेदव्यासेषु दासभक्तिम् एव अनुसृतवान्। दासभक्तेः मूल पुरुषः भगवान् श्रीहरिरेव। दासशब्दः विनयविवेकसौशील्यादिसद्गुणद्योतकः सङ्केतशब्दः वर्तते। अपि च सर्वदा भगवद्दर्शकं साधनं भवति।

''निरुतनिन्नरमनेय दासि एनिपळ'' सर्वदा भुवनत्रये लक्ष्मीदेवी तव दासी वर्तते। न केवलं तत् अपि च सर्वकालसर्वावस्थासु सा लक्ष्मीः अक्षरशब्दवाच्या सर्वशक्तियुता चेदपि तव आधीने अस्मि इति वदति।

यस्यां अपाङ्गलवमात्रत ऊर्जिता सा।
श्रीः यत्कटाक्षबलवत्यजितं नमामि।।

अपि च आदित्यपुराणान्तर्गतवेङ्कटाचलमाहात्म्ये सकलदेवताः श्रीमहाविष्णवे क्रियमाणाः सेवाः दृष्ट्वा लक्ष्मीः ताः सेवाः अहमेव करिष्यामि इति चिन्तितवती। श्रीहरेः हृदयनिवासिनी भूत्वा अपि दास्यभक्तिमेव लक्ष्मीः अनुसृतवती।

तत्सुखं तु रामा दृष्ट्वा मेने शेषैकभाजनम्।
अहमेवानुभोक्ष्यामि मत्पतेरङ्गसङ्गजम्।
सर्वाण्यभूद्रामा देवी देवायान्नततेजसे।
भोग्यवस्तुस्वरूपेण तव सेवाभिलाषिणी।
महानन्दाम्बुधौ मग्ना रमते सा रमा त्वया।
रमसे रमयैव त्वं, वैकुण्ठादिषु धामसु।।

श्रीमन्मध्वाचार्याः अपि श्रीमहालक्ष्मीः प्रतिदिनं भगवन्तं प्रेम्णा दृष्ट्वा कथं सेवां करोतीति मधुरतया सुस्पाष्टतया च मनोगोचररूपेण अकथयन्। भगवती लक्ष्मीः स्वकटाक्षवीक्षणैः भगवते विष्णवे कर्पूरनीराजनं समर्पयन्ती भगवतः बाहुपञ्जरे शुकोऽभवत्।

कोटि कोटि भृत्यरिरलु हाटकांबरन सेवे
साटि इल्लदे माडिपूर्ण नोटदिंद सुखिसुतिहळु।।
छत्रचामरव्यजनपर्यन्कपात्ररूपदळि निन्तु।
चित्रचरित नाद हरिय नित्य सेवे माडु तिहळु।।
पुरन्धर विठलन्नसेविसु तिहलु।
एमधन्यळोल कुमिएंथामान्यळो।।

कोटिशः भृत्याः ब्रह्मादिरुद्रपर्यन्तं भगवतः विष्णोः सेवायै संसिध्दाः सन्ति। तेषां सर्वेषाम् अपेक्षया लक्ष्मीः अधिकां सेवां कुर्वती विष्णुं पश्यन्ती सुखम् अनुभवति। कथं इत्युक्तौ छत्रचामरादि वस्तुषु भूत्वा हरिं सेवते लक्ष्मीः। अतः तस्याः कियती मान्यता इति कथयति।

भगवत्या लक्ष्म्या सह ब्रह्मादि देवताः दासभक्तिमार्गम् अनुसृतवन्तः। चतुर्मुखः ब्रह्मा **''तव दासोऽस्मि केवलं जन्मप्रभुतिभिः दासोऽस्मि केवलम्''** इति कथयति। दासभक्तिमार्गस्य अनुसारी हनुमान् अपि **''दासोऽहं कौसलेन्द्रस्य रामस्य क्लिष्टकर्मणा''** इति राक्षसानां रावणस्य च पुरतः अवदत्। भक्ताग्रेसरः प्रह्लादोऽपि **''भूमन् भ्रमामि वद मे तव दास्ययोगम्''** इति दास्यभक्तिम् एव अनुसृतवान्।

**''दासमाडिको एन्न स्वामि सासिरनामदवेङ्कटरमण''**

हे सहस्रनामधारिन्! श्रीवेङ्कटेश! मां तव दासं कुरु इति पुरन्धरदासवर्यः, **''दास दास दासर दास्यव कोडु''** - हे स्वामिन्! तव दासदासदास्यत्वं प्रयच्छ इति विजयदासवर्याः, **''दास नेंतेंत म्येते घासि माडुवरे''** अहं दासः इति अवदम् चेदपि परीक्षा करणीया वा इति गोपालदासवर्याः, **''दासोऽहं तव दासोऽहम्''** इति जगन्नाथदासाः दासभक्तिमार्गम् अनुसृतवन्तः। **''दास दासरमनेय दासियर मगनाम''** हे स्वामिन्! अहं तव दासदासदासजनानां गृहेषु दासपुत्रः इति कनकदासवर्याः अपि अवदन्।



भक्तसेवायाम्

## तिरुमलतिरुपतिदेवस्थानम्

# आपत्काले आनन्दनिलयवासः

व्यासकर्ता - श्री वै.वि.सुब्बारेड्डि, अध्यक्षः, तिरुमलतिरुपतिदेवस्थानम्
संस्कृतानुवादः- पि.चन्द्रकान्त कुमारः

'करोना' रोगकारणेन यावत्प्रपञ्चं भयभीतिप्रति कालमिदम्। 'मानवानां' उपहुतिकारणंकरोना भयङ्कर नृत्यं प्रपञ्चदेशान् पीडयति। अस्मिन् विपदशायां प्रपञ्चे बहुबृहश्रेष्ठ धार्मिक संस्था तिरुमल तिरुपति देवस्थानम् ।

बहूनि पारमार्थिक कार्यक्रमैस्साकं 'मानवसेवे माधवसेव' इत्यार्योक्ति अक्षरसत्यं कृत्वा 'सर्वेजनास्सुखिनोभवन्तु' इति सनातन धार्मिक आचरणं बहु सम्यक् आचरणं करोति।

**ति.ति.देवस्थानम् भविष्यदृष्टिः**

'करोना' उपद्रवं पूर्वमेव अहित्वातदनुकूलचर्याणाः मनुसरणे, भक्तोः किमपिकष्टं नानुभोक्तुं तद्वदर्शयितुं ति.ति.दे. अनुसरितचर्योः सत्फलिताः। अत्रैवभागतया मार्च्मासे सप्तदशदिनाङ्कतः समयनिर्धारितस्तोकान् प्रवेशं कल्पितवन्तः। 'वैकुण्ठंक्यूकांप्लेक्स्' मध्ये भक्ताः निरीक्षणावकाशं मं दत्वा ऋजुमार्गे दर्शनार्थं अनुमतिं प्रदन्तवन्तः। गिरौ प्रतिद्वौघण्टौ काले समस्तप्रदेशानां Sanitaization कृतवन्तः। 'करोना' नियन्त्रणे भौतिकदूरं अत्यावश्यकं भवति। अतः आन्ध्रप्रदेश् मुख्यमन्त्रिवर्याः वै.यस्.जगन्मोहन्रेड्डि महाभागैः सम्पर्केन तिरुमलायां भक्तानां प्रवेशं तात्कालिकतया नास्तीति मार्च्मासे एकोनविंशति दिनाङ्कि प्रकटनं कृतवन्तः। मार्च्मासे विंशतिदिनाङ्कि प्रातः आर्जितसेवा भक्तानां वि.ऐ.पि.विरामदर्शनं कल्पयित्वा, तिरुमलायां स्थितानां भक्तानां सर्वेषां यथावकाशं दर्शन भाग्यं प्रकल्प्य अनन्तरं गिरितः निष्क्रमणार्थं सहायं कृतवन्तः। तद्दिनतः तिरुमलेशस्य सेवाः सर्वाः एकान्ततया, आगमोक्तरीत्या ति.ति.दे. निर्वहणं कुर्वन्नस्ति। एतत्सन्दर्भे Lockdown समये तिरुमलनिवासं, दर्शनभाग्यं विचारं न कर्तुं दूरयितुं प्रतिदिनं श्रीवेङ्कटेश्वर भक्तिचानेल् (S.V.B.C.) द्वारा तिरुमलेशस्य कल्याणोत्सवं, तिरुचानूरु मातुः कल्याणं प्रत्यक्षप्रसारं कुर्वन्नस्ति। एवमेव सहस्राधिकभक्तसमूहमध्ये सञ्चाल्यमाणं ओंटिमिट्ट श्रीसीतारामस्वामिनः कल्याणोत्सवं आलयप्राङ्गणे परिमितं कृत्वा, श्रीवेङ्कटेश्वरभक्तिचानेल् द्वारा प्रत्यक्ष प्रसारं कृतवन्तः।

**रोगनिवारणार्थं यागादयः :-** 'करोना' रोगनिवारणार्थं ति.ति.दे. मार्च्मासे षड्विंशति दिनाङ्कतः अष्टाविंशति दिनाङ्कपर्यन्तं 'श्रीश्रीनिवास शान्त्योत्सवसहितधन्वन्तरिमहायागं त्रीणिदिनानि तिरुमलायां धर्मगिरिवेदविज्ञान पीठ्यां अत्यन्तवैभवतया निर्वहणं कृतवन्तः। श्रीनिवासवेदमन्त्रारोग्यजपयज्ञं तिरुमलायां आस्थानमण्डपे मार्च् षोडश तः पञ्चविंशति दिनाङ्कपर्यन्तं वैभवतया निर्वहणं कृतवन्तः। तत्र चतुर्वेदानां, पञ्चशाखानां आन्ध्रतेलङ्गाणतमिळकर्णाटकराष्ट्रसम्बन्धितवेदपण्डिताः श्रीनिवासवेदमन्त्रारोग्यजपयज्ञमन्त्राः पठितवन्तः। एवं लोकक्षेमं कामित्वा प्रजारोग्यप्रसादनार्थं भगवत्प्रार्थनां कृत्वां योगवासिष्ठं, श्रीधन्वन्तरिमहामन्त्रपारायणं तिरुमलायां नादनीराजन वेदिकायां ऐप्रेल् दशमदिनाङ्कतः प्रारम्भं कृतवन्तः।



तत्र भक्ताः भागस्वामिनः जाताः। 'श्रीवेङ्कटेश्वरभक्तिचानेल्' मध्ये प्रत्यक्षप्रसारं कारणात् कथितमन्त्रान् भक्ताः दूरदर्शनपुरतः उपविश्य पठन्तः सन्ति।

**मानव सेवे माधवसेव -** करोना लाक्डौन् क्लिष्टपरिस्थितिं अनुभूयमान तिरुपतिपरिसरप्रान्तेषु स्थितानां लक्षाधिकानां निराश्रयाणां, कर्मचारिणां प्रतिदिनं १,२०,००० अन्नप्रसादवितरणं अन्नप्रसादविभागद्वारा निर्माणं कृत्वा वितरणं कुर्वन्तः सन्ति। अनेनसाकं गोशालायां सहस्रगोसंरक्षणं ति.ति.दे. तिरुपति पट्टणे प्रायशः पञ्चशतं वीथिशुनकाणां आहारवितरणकार्यं कुर्वन्नस्ति। वीथ्यां सञ्चरतः पशुसंरक्षणाय तिरुपतिनगरे अलिपिरि बस्वाहनशालायाः समीपे कृत्रिमपशु संरक्षणशालायाः नियुक्तं कृतमस्ति। प्रतिदिनं प्रायशः ३ मेट्रिक्टन्नु पशुग्रासं, त्रिशतं किलोपरिमतं पशुतृणं आहारं च वितरणं कुर्वन्नस्ति। ति.ति.दे. स्वकीय आयुर्वेदपरिशोधनेषु भागतया 'करोना' नियन्त्रणार्थं 'रक्षज्ञ धूपं' (विसूचिका संहारक धूपं) 'पवित्र' (हस्तक्षालनद्रावकं) गण्डूषकम् (कवल औषधं) 'निम्बनश्यम्' (नासिकायां प्रोषण औषधम्) 'अमृत' (रोगनिरोधकशक्ति गुलिकाः) ये पञ्च विभागेषु औषधानि उत्पादितानि। एतदर्थं द्विशतं महानशकर्मचारिणां औषधवितरणं कृतवन्तः।

**करोनायुद्धार्थं एकोनविंशति कोटिरूप्यकाणि -**

स्विम्स् वैद्यशालां सम्पूर्ण करोना वैद्यशालायाः रूपेण परिवर्तितवन्तः। 'स्विम्स्' आवरणे 'श्रीपद्मावति महिला वैद्यकलाशालां राष्ट्रस्थायीकरोनावैद्यशालायाः रूपेण निर्मितवन्तः। अत्र वैद्यसम्बन्धपरिकराणि वायुमण्डलसामग्रीकृते एको न विंशति कोटि रुप्यकाणि प्रदत्तमस्ति। 'करोना' रोगसहायक चर्यार्थं ति.ति.देवस्थानाध्वर्थे तिरुचानूरु मध्ये स्थित पद्मावतिनिलयं, एवमेव तिरुपतिनगरे विष्णुनिवासं, श्रीनिवासं, माधवं विश्रान्तगृहाः, द्वितीयसत्रं, चित्तूरुजिल्लाधिकारिणः ति.ति.दे. प्रदत्तं कृतम्।

**नित्यकल्याणं पच्चतोरणं : -**

'नित्यकल्याणं पच्चतोरणं' जातीयपदस्य सार्थकं कृत्वा तिरुमलां हरितवनेन स्थापयितुं ति.ति.दे. अमोघ कृषिं करोति।

मेघश्यामं पीतकौशेयवासं

Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy. E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.



अंतर्जातीय उपद्रवस्य करोना वैरस् व्याप्तेः निवारणोपाय निबन्धनेषु (लाक्डौन्) निराश्रयाणां दूरप्रान्तकार्मिकाणां मूगजीवानां ति.ति.देवस्थानेन भोजन वितरण दृश्याणि।














